पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन 'आदर्शशोधसंस्थानम्' इति सम्मानितम्

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# प्रमाणलक्षणम्

श्रीमज्जयतीर्थविरचितया न्यायकल्पलतानाम्न्या टीकया,
श्रीविजयीन्द्रतीर्थविरचितया प्रमाणलक्षणटीकाव्याख्यया च सहितम्

सम्पादकः
**विद्वान् पि.एस्. शेषगिरि आचार्यः**
मैसूरु







प्रकाशनम्
पूर्णप्रज्ञसंशोधनमन्दिरम्, पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८
२०१३

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन 'आदर्शशोधसंस्थानम्' इति सम्मानितम्

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# प्रमाणलक्षणम्

श्रीमज्जयतीर्थविरचितया न्यायकल्पलतानाम्न्या टीकया,
श्रीविजयीन्द्रतीर्थविरचितया प्रमाणलक्षणटीकाव्याख्यया च सहितम्

सम्पादकः
विद्वान् पि.एस्. शेषगिरि आचार्यः
मैसूरु.

प्रकाशनम्

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२०१३

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला – १०७

# श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम् प्रमाणलक्षणम्

## श्रीमज्जयतीर्थविरचितया न्यायकल्पलतानाम्न्या टीकया,
## श्रीविजयीन्द्रतीर्थविरचितया प्रमाणलक्षणटीकाव्याख्यया च सहितम्

ISBN : 978-93-81275-27-6

सम्पादकः

विद्वान् पि.एस्. शेषगिरि,आचार्यः, मैसूरु.

प्रकाशनम् -

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पा मेन् रोड्, बेङ्गलूरु - २८

पुटानि : xxiv + २४८

प्रथममुद्रणम् : २०१३

मुद्रितपुस्तकसङ्ख्या : १०००

मूल्यम् : १६० रूप्यकाणि

मुद्रणालयः : वागर्थप्रिण्टानिक्स्, बेङ्गलूरु

**Poornaprajna Samshodhana Mandiram**
Recognised as 'Adarsha Shodha Sansthan'
by Rashtriya Sanskrit Sansthan, Deemed University,
Ministry of H.R.D., Govt. of India, New Delhi

# PRAMĀṆA-LAKṢAṆAM

**of Sri Madhwācārya**

**(with Nyāyakalpalatā Tīkā of Sri Jayatīrtha and sub-commentary of Sri Vijayīndratīrtha)**

*Edited by*
**Vidwan P.S. Sheshagiri Acharya**
Mysore

*Published by*
**Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Katriguppa Main Road,
Bangalore-28

2013

Poornaprajna Samshodhana Mandira Granthamālā-107

# PRAMĀṆA-LAKṢAṆAM of Sri Madhwācārya

**(with Nyāyakalpalatā Tīkā of Sri Jayatīrtha and sub-commentary of Sri Vijayīndratīrtha)**

**ISBN : 978-93-81275-27-6**

*Edited by* **Vidwan. P.S. Sheshagiri Acharya,** Mysore

Published by **Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha,
Katriguppa Main Road, Bangalore-28

First Edition : 2013

Copies : 1000

Pages : xxiv +248

**Price : Rs. 160/-**

*This publication is brought out by the generous financial help of*
**Rashtriya Sanskrit Sansthan, (Deemed University), New Delhi**

*Printed by :* **VAGARTHA PRINTONICS,** Bangalore

**श्रीश्री विश्वेशतीर्थश्रीपादाः**
श्रीपेजावराधोक्षजमठः
जगद्गुरु श्रीमध्वाचार्यमहासंस्थानम्
उडुपि-५७६१०१, कर्णाटक

**Date : 5-11-2013**

# अनुग्रहसन्देशः

पद-वाक्य-प्रमाणपारावारपारीणैः सर्वतन्त्रस्वतन्त्रैः श्रीमद्विजयीन्द्रतीर्थ-श्रीमच्चरणैः विनिर्मिताम् अप्रकाशितां प्रमाणलक्षणटीकाभाववर्णनटिप्पणीं विदुषां करकमलयोः समर्पयितुं मोमुद्यते नश्चेतः। नैतदतिरोहितं विदुषां यत् भारतीय-दर्शनशास्त्रे प्रमाणमीमांसायां तत्त्ववादिनाम् (द्वैतवेदान्तिनाम्) असाधारणं योगदानमस्तीति। दर्शनशास्त्राध्येतॄणां विदुषाम् एका भ्रान्तिः तत्रतत्र ग्रन्थेषु प्रकाशिता यथा द्वैतवेदान्तिनः प्रच्छन्ननैयायिका इति। वचनमिदं तु अविज्ञाय सम्प्रदायम् अनधीत्यैव च द्वैतवेदान्तदर्शनं समुत्थमिति मन्यामहे। न्यायशास्त्रं तु गौतम-वात्स्यायन-वाचस्पतिमिश्रादिभिः प्रवर्तितं समेषां दर्शनानाम् उपजीव्य-भूतमिति निश्चप्रचम्। तथाऽपि द्वैतवेदान्ते प्रमाणस्वरूपनिरूपणावसरे नैयायिक-दर्शनस्य न कोऽपि प्रभावः समस्तीति सप्रमाणं निवेदयामः। आस्माकीना प्रमाणविचारप्रणाली तु भगवता व्यासेन प्रणीतं ब्रह्मतर्कमवलम्ब्य समुद्भूता। तदुक्तं भगवत्पादाचार्यैः- 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः' इति।

प्रमाणस्वरूपनिरूपणावसरे नैयायिकाः 'प्रमाकरणं प्रमाणम्' इति ज्ञान-साधनस्य प्रामाण्यं मन्वते । मीमांसकास्तु ज्ञानस्य प्रामाण्यम् । श्रीमदानन्दतीर्थ-भगवत्पादाचार्यास्तु ज्ञान-तत्करणसाधारणं 'याथार्थं प्रमाणम्' इति प्रमाणलक्षणं निरूपयन्तः दर्शनक्षेत्रे नूत्नामेव विचारप्रणालीं प्रकाशयामासुः । 'ज्ञानविषय एव हि करणानामपि विषयः न हि किमप्यविषयीकृत्य करणानि ज्ञानं जनयितु-मीशते' इति वदन्तः श्रीमट्टीकाकृत्पादाः ज्ञान-करणयोः साक्षादेव ज्ञेयविषयी-कारित्वं समर्थयामासुः । अन्यैर्दार्शनिकैरनङ्गीकृतं स्मृतिप्रामाण्यमिह प्रसाधि-तम् । मनसः स्वातन्त्र्येण स्मरणसाधनत्वमुपपाद्य तस्य प्रामाण्यं परिरक्षितम् । प्रत्यक्षं सप्तविधं साक्षि-षडिन्द्रियभेदेनेति वदन्तः श्रीमदाचार्याः निर्दोषमेव साक्षिस्वरूपं प्रतिपादयामासुः । स्वरूपेन्द्रियं साक्षीत्युच्यते तदभिव्यक्तं ज्ञानं चेति साक्षिस्वरूपमुपवर्ण्य 'काल-आकाश-आत्म-तद्धर्माः सुखदुःखादयः साक्षिग्राह्याः' इति निरूपितम् । ज्ञानग्राहकं साक्षीन्द्रियं स्वरसत एव (प्रमाणान्तरसंवादनिरपेक्ष एव) प्रामाण्यं गृह्णाति । न हि साक्षिगृहीतेष्वर्थेषु सुखदुःखादिषु कचन संशयो दृष्टः । दूरस्थत्वादिदोषे सति चपलं चञ्चलं च मनः तत्र प्रामाण्यं गृह्णाति, साक्षी तु तटस्थ एव भवतीति अपूर्वाः विषयाः साक्षिस्वरूपनिरूपणावसरे टीकायां प्रतिपादिताः । अनुमाननिरूपणावसरे अर्थवचनदोषभेदात् द्विविधोपपत्तिदोष इत्युक्तम् । विरोधासङ्गती तु साक्षादुपपत्तिदोषौ तद्द्वारा वचनस्यापि । वचनदोषौ न्यूनाधिक्ये वचन-द्वारेणार्थस्यापि । एवं पञ्चावयवनियमः हेतुसाध्ययोः सामानाधिकरण्यनियमश्च पराकृतः । अनेकेऽपूर्वा विषया अत्र निरूपिता इत्यत्र अध्येतारः प्रमाणम् ।

प्रमाणलक्षणस्य टीकायाश्च आशयविशेषं निरूपयन्ती भावविवरणटिप्पणी चतुरधिकशतग्रन्थरत्नप्रणेतृभिः श्रीमद्विजयीन्द्रतीर्थश्रीमच्चरणैः विरचिताऽपि अद्ययावद् अप्रकाशिता विद्वद्धौरेयैः अस्मच्छिष्यप्रवरैः पि.एस्. शेषगिरि आचार्यैः सुष्ठु सम्पादिता। ग्रन्थरत्नमिदं पूर्णप्रज्ञसंशोधनमन्दिरेण प्रकाशितं दृष्ट्वा अतीव सन्तुष्टा स्मः । ग्रन्थस्यास्य पाठप्रवचनाभ्यां विद्वांसः विद्यार्थिनश्च सूपकृता भवेयुरित्याशास्महे ।

**श्रीश्रीविश्वेशतीर्थश्रीपादाः**

**श्रीपेजावर-अधोक्षजमठः, उडुपि**

## DIRECTOR'S NOTE

The Dvaita Vedanta has made unique contribution to Indian Epistemology. Most of the Indian scholars were of the opinion that the Madhva Epistemology had been influenced by Nyaya system and hence lacks creativity in thoughts. This is absolutely a wrong concept. Dvaita system is totally based on ancient and authoritative system of logic - Brahma-tarka of Narayana, which is condensed by Lord Vedavyasa in his texts. Definition of knowledge and delineation on the instruments of knowledge is a very interesting discussion in Dvaita philosophy. Nyaya system of Indian philosophy says that "Valid cognition is *Pramana*". Sri Madhva remarks - *"Yathartham Pramanam"*. The meaning of this definition as follows:

That which records or recognizes (grasps) a thing (substance) is called *Pramana*. Definition of *Pramana* in Dvaita system covers both the knowledge and its instruments as well. The knowledge in its true form is called *Kevala-pramana* and its instruments are called *Anu-Pramanas*. The definition of *Pramana* given by Sri Madhva is more comprehensive than any definitions attempted by other systems of Indian philosophies. Defectless perception *(Pratyaksha)*, inference *(Anumana)*, and verbal testimony *(Agama)* which gives rise to correct knowledge are called *Anu-pramanas*.

Sri Madhva distinguishes *Kevala-pramana* as of four kinds namely:

1. *Ishvara-jnana*, (Knowledge of God)
2. *Lakshmi-jnana* (Knowledge of Lord's Consort - Lakshmi)
3. *Yogi-jnana* (Knowledge of a sage)
4. *Ayogi-jnana* (Knowledge of a commoner)

Yet another distinction in the *Ayogi Jnana* is *Svarupa-jnana* (Knowledge which is the very nature of selfhood) and *Vrtti-jnana* (sensory knowledge gained by means of internal and external senses). There is an interesting discussion on definition and

demonstration of *Svarupa-jnana* and *Vrtti-jnana* in Dvaita philosophy. Highlights of Madhva-thoughts are as follows:

A. The concept of *Akhyati-vada* is absolutely wrong. Knowledge, which records wrong data of substances or attributes etc., is called *Anyathakhyati - (Anyad Anyatmana vishayeekurvad jnanam Anyathakhyatih).*

B. The perception *(Pratyaksha)* is of seven forms (kinds). This distinction is based on the fact that perception can arise out of seven sense organs *(Indriyas)*. The *Sakshi* is called *Atma-svarupendriya* (The Self by itself acting as an Indriya or sense) which comprises of valid perception of its own self and its attributes like bliss, consciousness etc., of mind and its modifications, perceptual knowledge gained through external senses. The *Sakshi* or Self-sense recognises the time, space, God, *Avidya* (Ignorance), *Dharma* (Piety), *Adharma* (Sin) and others.

C. The memory *(Smrti)* is not only caused by the *Samskara* (Latent Impressions), but the mind too is the creator of the memory. *Samskara* (Latent Impressions) is just the instrument. The memory is also a Pramana, because it records the true data of substance etc.

D. No compulsion of *Pancha-avayavas* (Five-Membered Syllogism)

   The Nyaya School advocates that an argument has to be represented using the five-membered syllogism consisting of Proposition, Reason, Illustration, Co-relation and Conclusion. Sri Madhva proves on common experience that a strict rule to advocate all the five steps is not a matter of compulsion. Such an usage is only for detail presentation and not a necessity.

E. *Virodha* (Contradiction) and *Asangati* (Irrelation) are errors of inference.

   The Nyaya School considers a number of fallacies related to the inference. However, Sri Madhva remarks that all those

numerous fallacies may very well be accommodated within just two fallacies namely Contradiction and Irrelation. If at all the invariable concomitance and others are violated, it would come under Contradiction. If the Reason and others are absent in the substratum, it amounts to Irrelation. This is the most wide and easiest of classification.

F. *Yogyetara-anvitabhidhanavada* (Theory of connotation by words with relation)

Words broken by themselves do not give rise to any credible meaning. However, a mere relation of words which do not have a meaning too cannot give rise to a composite meaning of a sentence. Improper relation is an another defect. However, when a sentence yields a composite meaning, it happens by the words which are bound or interlinked with a proper relation which is justified. This unique theory has been forwarded by Sri Madhva.

All these thoughts were explained in Pramana-lakshana of Sri Madhvacharya, Sri Jayatirtha Swamin wrote a valuable commentary on Pramanalakshana-prakarana, which focuses light on Madhva Epistemology as well as on other branches of Indian philosophy. Sri Vijayidratirtha Swamin contributed Bhava-vivarananam sub-commentary on Pramanalakshana-teeka which was till now unpublished and unknown to the society of Madhva tradition. Sri Vijayindratirtha Swamiji has contributed more than 104 works in different branches of Indian philosophy and Madhva tradition - "Chaturadhika-shata-grantha-praneta".

Vidwan P.S. Sheshagiri Acharya critically edited this text with two manuscripts. Both manuscripts are broken and mistakes were found in the writing of the script. Vidwan Sheshagiri Acharya, with his rich experience in editing of the rare and valuable manuscripts and mastery on Dvaita Vedanta, edited this work with valuable notes. Vidwan Krishnamurthy, son of Late Prof. S.V. Bhima Bhat, a well-known scholar of Dvaita Vedanta, has brought a manuscript from Sode Mutt, Udupi and recorded various

readings of the manuscript. I express my gratitude H.H. Sri Vishvavallabhatirtha Swamiji of Sri Sode Mutt for rendering the manuscript. I also record my gratitude to Vidwan Krishnamurthy, who has taken pain in recording the readings. I have no words to express on creativity of P.S. Sheshagiri Acharya, who has critically edited the rare and valuable manuscript.

I prostrate with sincere devotion to Sri Vishveshatirtha Swamiji who has been guiding the activities of the Samshodhana Mandiram for its all-round development.

I sincerely thank Prof. Radha Vallabha Tripathi, Vice-chancellor, Rashtriya Sanskrit Samsthan, New Delhi, who evinces keen interest in all the activities of Samshodhana Mandiram and lends a helping hand whenever we approach him. I also express my gratitude to Prof. Subbaraydu, Registrar of Rashtriya Sanskrit Sansthan and Dr. Prakash Pandey, Head of Adarsha Scheme, for continuous encouragement in development our institutions' activities.

I express my gratitude to Prof. K. Hayavadana Puranik, Chairman of Poornaprajna Samshodhana Mandiram for his whole hearted support for our academic activities. I also express my gratitude for Prof. D. Prahlada Char for valuable guidance in the development of institution.

I thank M/s.Vagartha Printers who have printed this book very nicely, in a short time. I am sure they will extend the same co-operation in future also.

**Dr. A.V. Nagasampige**
Director

# प्रास्ताविकं किञ्चित्

प्रमाणलक्षणग्रन्थः श्रीमन्मध्वाचार्यरचितेषु दशप्रकरणेषु प्रथमः । अयं च ग्रन्थो गहनार्थ इति टीकाकृद्भिरेव प्रमाणपद्धतावादावेव न्यरूपि । सम्प्रति अस्य प्रकरणग्रन्थस्य न्यायकल्पलतानाम्न्याः श्रीमज्जयतीर्थविरचितायाः टीकाया व्याख्यानत्रयमुपलभ्यते । तत्र श्रीराघवेन्द्रतीर्थविरचिता व्याख्यैका सङ्क्षेपेण वर्तते । अपरा श्रीवंशपल्लीश्रीनिवासतीर्थविरचिता मन्दोपकारिणी ईषद्विस्तरेण प्रवर्तते । टिप्पणद्वयमिदं नूनं समानकालीनम् । इदानीं श्रीविजयीन्द्रतीर्थश्रीमच्चरणानां व्याख्या इदंप्रथमतया प्रकाश्यते । एते तु महानुभावा श्रीराघवेन्द्रतीर्थानां परमगुरवः, श्रीसुरेन्द्रतीर्थानां शिष्याः । एतेषां विद्यागुरवस्तु सुगृहीतनामधेयाः श्रीव्यासतीर्थश्रीमच्चरणाः, येषां वैदुष्यं विद्वज्जगति प्रसिद्धम् । श्रीविजयीन्द्रतीर्था अपि महामेधाविनः तादृशाचार्य-वरेभ्यो विद्यां लब्ध्वा चतुरधिकशतग्रन्थरत्नानि प्रणिन्युरिति प्रामाणिकी प्रसिद्धिरस्ति । नाधुनापि ते सर्वे ग्रन्थाः प्राकाश्यं भजन्ते । केचिदेव प्राकट्यमलभन्त । तेषु ग्रन्थेष्वन्यतमोऽयं प्रमाणलक्षणटीकाव्याख्यानरूप इदानीं प्रकाश्यत इति सन्तोष्टव्यम् ।

मातृकास्तिस्रोऽवलम्ब्यायं ग्रन्थः शोधितः । सर्वा अपि मातृकाः प्रायोऽशुद्धाः । ग्रन्थकाराणां शैली च तर्कजटिला वर्तत इत्यपि हेतोः लिपिकाराः प्रामाद्यन्निति भाति । मया तु यावच्छक्ति शोधितम् । कानिचन वाक्यानि तत्रतत्रत्यानि दुरवगमान्येवासन्निति सप्रश्रयं निवेद्यते । अधस्तनटिप्पणेषु तथा निरदिश्यन्तापि ।

बहुषु स्थलेषु श्रीविजयीन्द्रतीर्थसम्मतः टीकापाठोऽन्यादृश एव वर्तत इतीदमाश्चर्यम् । क्वचित् यानि प्रतीकान्यध्रियन्त तेषां मूलटीकैव नोपलभ्यते । तादृशस्थानानि तत्रतत्रासूचिषत ।

अत्रत्यलोपदोषान् शोधयित्वा अध्येतारो मामनुगृह्णन्त्विति प्रार्थये । अस्य कार्यस्य कृते प्रोत्साहधनं वितीर्योपकृतवतो भारतानुशासनस्य तथा सर्वस्यास्य प्रबन्धकस्य पूर्णप्रज्ञसंशोधनमन्दिरस्य तथा तन्निर्देशकस्य डा. ए.वि. नागसम्पिगेमहाभागस्य च कृते अधमर्णोऽयं जन इति निवेद्य विरम्यते ।

**विद्वान् पि.एस्. शेषगिरि आचार्यः**

# विषयानुक्रमणिका

| विषयाः | पृ.सं. |
|---|---|

| विषयाः | पृ.सं. |
|---|---|

* * *

# प्रमाणलक्षणम्

## श्रीमज्जयतीर्थविरचितटीकया,

## श्रीविजयीन्द्रतीर्थविरचितया प्रमाणलक्षणटीकाव्याख्यया च सहितम्

टीका प्रणम्यागण्यकल्याणगुणाब्धिं पुरुषोत्तमम् ।
पूर्णबोधानपि गुरून् व्याकुर्वे मानलक्षणम् ॥

ग्रन्थाऽरम्भस्य मङ्गलाऽचरणस्य वक्ष्यमाणार्थप्रतिज्ञायाश्च कर्तव्यत्वसमर्थनम्

इह खलु 'सुखमेव मे स्यात् दुःखं मनागपि मा भूत्' इति निखिलापेक्षित-मोक्षस्येश्वरसाक्षात्कारमन्तरेणासम्भवात्, तस्य च प्रमाणानि विनाऽनुदयात्, प्रमाणानां च यथावद्विदितानामेव तद्धेतुत्वोपपत्तेः तत्स्वरूपं [1]'यथावज्ज्ञाप-यितुकामो भगवानाचार्यवर्यः प्रारिप्सितग्रन्थाविघ्नपरिसमाप्त्यादिप्रयोजना-विगीतशिष्टाचारपरम्परादिप्राप्तेष्टदेवताननतिपूर्वकं श्रोतृशेमुषीमनुकूलयिष्यन् वक्ष्यमाणमेवाग्रे दर्शयति ।

**मूलम्** [2]अशेषगुरुमीशेशं नारायणमनामयम् ।
सम्प्रणम्य प्रवक्ष्यामि प्रमाणानां स्वलक्षणम् ॥

नारायणस्यैव नम्यत्वोपपादनम्

नारायणस्यैव नमस्कारे को हेतुरित्यत उक्तम्- **अशेषगुरुमिति** ॥ सर्वज्ञं गुरुमिति पाठे सार्वज्ञ्यं गुरुत्वस्योपपादकम् । किंच नारायणस्यैवाति-समर्थत्वेनेष्टप्रदानसम्भवात् तन्नतिरिति भावेनोक्तम्- **ईशेशमिति** ॥ अपिच रागादिदोषरहिता हि लोके वन्द्या भवन्ति । नारायणश्चाशेषदोषदूर इति

---

१. 'यथावद्दर्शयितुकामः' इति राघवेन्द्रतीर्थपाठः ।

२. 'सर्वज्ञं गुरुमीशेशम्' इति पाठान्तरम् ।

**सूचयितुम्- अनामयमिति ॥** आमयपदं दोषान्तरोपलक्षणम् । प्रवक्ष्यामीति उद्देशविभागपरीक्षाद्युपयोगिसङ्ग्रहायोपसर्गः । न हि तद्विना प्रकृष्टा लक्षणोक्तिः स्यात् ।

## ॥ श्रीविजयीन्द्रतीर्थविरचिता प्रमाणलक्षणटीकाव्याख्या ॥

श्रीगुरुभ्यो नमः । श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः।

**प्रणम्य नन्दबालं तं पूर्णबोधान् जयाभिधान् ।**
**गुरून् मुनिवरानन्यान् श्रीसुरेन्द्रगुरूनपि ॥**
**श्रीसुरेन्द्रगुरोः शिष्यो विजयीन्द्रयतिर्मितम् ।**
**प्रमाणलक्षणव्याख्याभावं वक्ष्ये यथामति ॥**

प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यर्थं कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थादौ निबध्नन् शिष्यमनस्समाधानार्थं चिकीर्षितं प्रतिजानीते- **प्रणम्येति ॥** तत्र भक्ति-श्रद्धातिशयकथनाय प्रशब्दः । करिष्यमाणापेक्षया पूर्वकालत्वं क्त्वाप्रत्ययार्थः । न तु प्रधानक्रियामात्रापेक्षया तद् विवक्षितम् । एवं च पुरुषोत्तमप्रणामस्य गुरुपूर्णबोधप्रणामापेक्षयाऽपि पूर्वकालत्वे वेदिते[1] गुरुतमगुरुतरगुरुक्रमेणैव प्रणामः कर्तव्य इत्यपि शिक्षितमिति वेदितव्यम् । गुणाब्धिपुरुषोत्तमपदाभ्यां निर्गुणब्रह्मवादसाम्यवादौ परास्तौ । मानलक्षणस्य व्याकरिष्यमाणत्वेऽपि 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् प्रयुक्तः । अन्येषां व्याक्रियमाणत्वेऽपि मानलक्षणस्यैव प्राधान्यात् लिङ्गसमवायेन[2] प्राणभृच्छब्दवत्[3] मानलक्षणालक्षण-समुदाये मानलक्षणशब्दः प्रयुक्तः । ग्रन्थनामत्वेऽपि च लिङ्गसमवाय एव निमित्तं बोध्यम् । आचार्यकृतनारायणप्रणामस्य कर्तव्यताबोधकप्रमाणविरहात् प्रयोजन-

---

१. दर्शिते

२. लिङ्गसमवायेन (लिङ्गसमवायनये) प्राणभृत उपदधातीतिवाक्यस्थप्राणभृच्छब्दवत् ।

३. 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' - पा.सू. ५.१.१२९

विरहाच्च मानलक्षणकथनस्य प्रथमं प्रतिज्ञाया अनौचित्यमाशङ्क्याह - **इहेति ॥** इह जगति। खलु वाक्यालङ्कारे। दुःखनिवृत्तिमात्रस्य[1] अपुरुषार्थतया सुखस्यापि मोक्षस्वरूपेऽन्तर्भावमनुभवबलेनापि समर्थयितुं सुखमेवेत्युक्तम्। 'वरं वृन्दावने शून्ये सृगालत्वं स इच्छति। न तु निर्विषयं मोक्षं कदाचिदपि गौतम' इत्यभिगीत-वचनदर्शनात्[2]। तादृशपुरुषानपेक्षितत्वेऽपि मोक्षस्य सम्भवादधिकारिविषया-द्यखिलोक्तिरित्यपव्याख्यानम्[3]। मोक्षलक्षणस्यापि सुखस्य सुखत्वेनैव पुरुषार्थ-तया सकलकामनाविषयत्वात्[4]। अन्यथा स्वतः पुरुषार्थत्वं न स्यात्। मन्मते मोक्षीयसुखस्य चन्दनादिरूपविषयाधीनाभिव्यक्तिकत्वरूपसविषयत्वाङ्गीकारेण निर्विषयत्वस्यैवासिद्धेश्चेति। 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतिबलेनेश्वर-साक्षात्कारस्य मोक्षहेतुत्वमभिप्रेत्य ईश्वरेत्युक्तम्। तत्साक्षात्कारस्य[5] मोक्षमात्र-हेतुत्वेऽपि ग्रन्थस्य कथं तद्धेतुत्वमित्याशङ्क्य तदुपपादयितुं तस्य चेत्याद्युक्तम्। साक्षात्कारस्य मोक्षकारणत्वेऽपि परम्परया शब्दादेरपि तत्रोपयोगात् प्रमाणानीति बहुवचनोपपत्तिः। अविवेचितस्वरूपैः प्रमाणैः प्रमोत्पत्तावपि प्रमाणाविवेके तज्जन्यज्ञानविषयेश्वराप्रामाणिकत्वशङ्कया तत्साक्षात्कारार्थं प्रवृत्त्यनुपपत्तेः तदभावे च मोक्षानुपपत्तेः प्रमाणजन्यज्ञानस्य फलोपयोगित्वाय प्रमाणविवेकस्यावश्यं कर्तव्यत्वात्। तस्य च लक्षणादिभिर्विनाऽनुपपत्तेस्तज्ज्ञापनाय ग्रन्थकरणमुचित-मिति प्रमाणानामित्यादिनोक्तम्। एतेन[6] द्वितीया शङ्का निरस्ता। प्रारिप्सिते-त्यनेन चाविघ्नपरिसमाप्तिरादिशब्दोपात्तशिष्यार्थं प्रदानाविच्छेदरूपप्रचयगमनं च मङ्गलप्रयोजनम्, शिष्टाचारश्च तत्कर्तव्यतायां प्रमाणमिति दर्शयता प्रथमा शङ्का निरस्ता।

---

१. तुल्यव्ययफलत्वेन दुःखनिवृत्तिमात्रस्य...        २. इति रामाङ्गिगीतिदर्शनात्

३. विषया अखिलोक्तिरित्यपव्याख्यानम्।        ४. कामविषयत्वात्

५. ननु तत्साक्षात्कारस्य

६. एवं च ब्रह्मसिद्धय इत्यनेनोक्तमीश्वरज्ञानं मानलक्षणकथनप्रयोजनमिति द्वितीयशङ्का निरस्ता।

अत्र वदन्ति ॥ मङ्गलं न समाप्तौ हेतुः । व्यभिचारात् । न च विघ्नध्वंसद्वारा समाप्तौ तद्धेतुः । तस्य द्वारत्वे कामनायामनुल्लेखापत्तेः । किञ्च (कामना) विशेषणतया तत्फलत्वस्यावश्यकत्वाल्लाघवाच्च तस्यैव फलत्वमुचितम् । अपि च विघ्नध्वंसं प्रति पूर्ववृत्तित्वग्रहानन्तरमेव समाप्तिं प्रति पूर्ववृत्तित्वग्रहाद् अन्यथासिद्ध्याऽपि न तत् फलम्[१] । अन्यथा मणिध्वंसजन्यदाहे मण्यवयव-विभागस्यापि हेतुत्वापत्तेः । अपि च विघ्नध्वंसस्य जनकत्वेन न तज्जन्यता-वच्छेदकत्वम् । तयोर्विरोधात् । किञ्च विघ्नध्वंसस्य द्वारत्वे तज्जन्यतापि किमवच्छेदेन । न तावत् समाप्तित्वेन । व्यभिचारात् । अन्यच्च दुर्वचम् । सुवचत्वे वा तदवच्छेदेनैव मङ्गलजन्यतास्तु[२] । किं तस्यावच्छेदकतया (विघ्नध्वंसजन्यता-वच्छेदकतया ?) अन्वयव्यभिचारादपि न मङ्गलं समाप्तौ हेतुः । न च विघ्नसमसङ्ख्यं तत् तथा । अधिकसङ्ख्याद समाप्त्यापत्तेः । न चान्यूनसङ्ख्यं तथा । अन्यत्र तथाभूतादपि समाप्त्यापत्तेः[३] । न च ज्ञानरूपलौकिककारणविरहात् तदभावः । साङ्गाद् वैदिककर्मणः फलावश्यम्भावनियमात् । अन्यथा समसङ्ख्यतयापि[४] हेतुत्वं न कल्प्येत । अपि च विघ्नध्वंसस्य द्वारत्वे सिद्धे तदवच्छेदेन मङ्गलस्य समाप्तिहेतुत्वसिद्धिः । तत्सिद्धौ चान्यथानुपपत्त्या विघ्नध्वंसस्य द्वारत्वसिद्धि-रित्यन्योन्याश्रयोऽपि स्यात् । किञ्च प्रमत्तानुष्ठितसमाप्तिः मङ्गलं विनैव वाच्या । तदुद्देशेन मङ्गलाननुष्ठानात् । एवं चान्यत्र क्लृप्तपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतस्य मङ्गलस्य न कारणत्वम्[५] । .... (अत्र ग्रन्थपातः) । अपि चाचारानुमेया ह्यत्र श्रुतिः । सचाचारो यावता विना नोपपद्यते तावन्मात्रबोधिकां श्रुतिं कल्पयेत् न त्वधिकमपि । एवं च समाप्तिप्रयोजनकत्वज्ञानादप्याचारसम्भवेन तेन हेतुत्वबोधिका श्रुतिर्नानुमेया । न च हेतुत्वज्ञानमेव प्रवृत्तिप्रयोजकम् ।

---

१. न समाप्तिस्तत्फलम् ।
२. मङ्गलजन्यतावच्छेदकत्वमस्तु
३. अङ्गकृततथाभूतादपि समाप्त्यापत्तेः
४. अन्यथाऽन्यूनसङ्ख्यतयाऽपि
५. मङ्गलस्यान्यथासिद्धत्वमपि

लाघवेन प्रयोजकत्वज्ञानस्यैव प्रवर्तकत्वात् । अन्यथा पाकार्थिनः तण्डुल-क्रयादावप्रवृत्त्यापत्तेः । तस्मान्न समाप्तिः फलं, नवा विघ्नध्वंसो द्वारम् । अपि तु स एव फलमिति ।

अत्राहुः ॥ मङ्गलं समाप्तौ हेतुः । न च व्यभिचारेण हेतुत्वबोधकप्रमाणाभावः । प्रथमं हेतुत्वाज्ञानेऽपि श्रुत्या स्वर्गत्वयागजन्यत्वयोरिव समाप्तित्वमङ्गलजन्यत्वयोः सामानाधिकरण्य उपस्थापितेऽनन्तरं स्वर्गविशेषवत् विघ्नध्वंसद्वारकत्वे अवच्छेदकत्वकल्पनस्य निष्प्रत्यूहत्वात् । मङ्गलं विनापि समाप्तिरित्यस्य समाप्तित्वावच्छेदकत्वग्रहे प्रतिबन्धकत्वात् । अन्यथा स्वर्गेऽपि साम्यप्रसक्तेः[1] । प्रत्यक्षे तु अन्वयव्यतिरेकग्रहस्य सहकारित्वात् । तयोश्चावच्छेदकग्रहमन्तरेण ग्रहणासम्भवात् । अवच्छेदकग्रहपुरस्कारेणैव कारणताग्रहात्[2] । यत्तु विघ्नध्वंसस्य द्वारत्वे कामनाविषयत्वं न स्यादिति । तन्न । अप्रयोजकत्वात् । किञ्च कामना-विषयत्वाभावो हि प्रवृत्तशिष्टेच्छाविषयत्वाभावः । स च नापाद्यः । अपूर्वद्वारा स्वर्गे इवापूर्वेऽपि उक्तकामनाविषयत्वसत्वात् । न च विषयत्वनैयत्याभाव आपाद्यः। इष्टत्वात् । मङ्गलं समाप्तिसाधनमित्याप्तवाक्यादवगत्यापि मङ्गले शिष्टप्रवृत्ति-सम्भवेन तदिच्छायां विघ्नध्वंसस्याविषयत्वात् । न च सोऽशिष्ट एवेति वाच्यम् । तल्लक्षणासम्भवात् । एतेनैव बाधकेन तस्याशिष्टत्वेऽन्योन्याश्रयात् । बाधकान्तरस्य च तत्राभावात् । न चाधिकारिविशेषणकामनाविषयत्वाभाव आपाद्यः । इष्टत्वात् । समाप्तिकामो मङ्गलमाचरेत्याकारिकाया एव श्रुतेर्लाघ-वेनानुमानात् । अत एव किञ्च विशेषणतयेत्यादि[3] परास्तम् ।-तस्य प्रथमं फलत्वाकल्पनात् । अत एव अपिच विघ्नध्वंसं प्रतीत्यादिनोक्ताऽन्यथासिद्धि-रप्यपास्ता । विघ्नध्वंसं प्रति पूर्ववृत्तित्वग्रहं विनापि हेतुताया वेदेन बोधनात् । विघ्नध्वंसजन्यतापि समाप्तेस्तज्जन्यत्वे श्रुत्या बोधित एव ज्ञेयेति[4] । किञ्च

---

१. साम्यात्          २. कारणताग्रहः          ३. विशेषणेत्यादि

४. ज्ञायते/ज्ञायेत

विघ्नध्वंसेत्यादिनोक्तं निरस्तम् । अन्वयव्यभिचारस्यानवकाश एव । विघ्नानुसारिमङ्गलाचरणेन विघ्नान्यूनसङ्ख्यस्यैव मङ्गलस्य हेतुत्वात् । न चाङ्गकृतेः समाप्त्यापत्तिः साङ्गाद् वैदिककर्मणः फलावश्यम्भावनियमादिति वाच्यम् । साङ्गस्यापि तस्य लौकिककारणसत्त्व एव जनकत्वोपगमात् । एवमपि नियमाक्षतेः[१] विघ्नध्वंसस्य कारणताग्रहोत्तरकालं द्वारत्वकल्पनात्[२] । अपि च विघ्नध्वंसस्य द्वारत्व इत्याद्युक्तान्योन्याश्रयोऽपि निरस्तः । यच्च जनकत्वेऽवच्छेदकत्वं विरुद्धमिति । तन्न । ग्राहके सति तेजस्तेजोगतोद्भूतरूपयोरिव उभयथाप्यविरोधात् । ग्राहकस्य च प्रकृते दर्शितत्वात् । यदपि किञ्च प्रमत्तेत्यादि तदपि न । वेदेनानन्यथासिद्धत्वगर्भहेतुत्वे बोधिते तन्निर्वाहाय प्रमत्तादिस्थले प्राक्तनसुकृतसम्पत्तेः कल्पनात् । यदपि चाचारानुमेयेत्यादि तदपि न । हेतुत्वज्ञानस्यैव प्रवर्तकतया श्रुत्याऽपि तस्यैव प्रतिपादयितुमौचित्यात् । अन्यथा यागहेतुत्वस्यापि दुर्लभत्वापातात् । तण्डुलक्रयादावपि तत्तत्साधनत्वज्ञानस्यैव प्रवर्तकस्यानुभवसिद्धत्वाच्च । न च यागस्य नियतपूर्ववृत्तित्वमात्रे बोधिते प्रमाणान्तरेणान्यथासिद्धिविरहावगम इति वाच्यम् । तस्यानन्यथासिद्धत्वानवगतौ तद्व्यावृत्तान्यथासिद्धेरेव व्यावर्तनायोगात् । तत्र चातिप्रसङ्गशङ्कासत्वात् । न चानादिशिष्टव्यवहारेणैव (तत्र) अन्यथासिद्धत्वावगमः[३] । मङ्गलेऽपि प्राचां शिष्टानां तद्व्यवहारादिति ।

एतेन काशीमरणादीनां मोक्षे व्यभिचारेऽपि अनतिप्रसक्तधर्मसामानाधिकरण्येन कार्यकारणभावे आगमेन बोधिते तत्वज्ञानविशेषव्यापारकत्वमवच्छेदकमादाय हेतुता स्यादित्यापादनमपास्तम् । इष्टत्वात् । एतावांस्तु विशेषः । यत् तमेवं[४] विदित्वेत्यादिवाक्यबलेन रामोपनिषदि तारकोपदेशश्रवणेन[५] च तत्वज्ञानद्वारैव हेतुत्वमिति सङ्क्षेप इति[६] ।

---

१. नियमापत्तेः २. ....ग्रहोत्तरकालद्वारत्वकल्पनात् ३. अनन्यथासिद्धत्वावगमः
४. एतमेवम् ५. तारकोपदेशश्रवणेन ६. हेतुत्वमिति न दोष इति

शिष्टाचार इत्यत्र शिष्टत्वमभ्रान्तत्वम्। अलौकिकविषयत्वं चाचारविशेषणमवगन्तव्यम्। एवं च मङ्गलं वेदबोधितकर्तव्यताकम् अलौकिकविषयशिष्टाचारविषयत्वात् ज्योतिष्टोमवदित्यनुमानं द्रष्टव्यम्। शिष्टपदेन निष्फलचैत्यवन्दनादि एवमगम्यागमनादि च व्यावर्तितम्। आद्ये इष्टसाधनत्वांशे भ्रमात्। द्वितीये बलवदनिष्टाननुबन्धित्वांशे भ्रमात्। अलौकिकेत्यनेन च लौकिकप्रमाणप्रमापितबलवदनिष्टाननुबन्धीष्टसाधनताकभोजनादिव्युदासो द्रष्टव्यः। शिष्यबुद्ध्यनुकूलनेन प्रतिज्ञासार्थक्यमिति न तृतीयशङ्काऽपीति। श्रोत्रियेत्यादिनोक्तं प्रमाणोद्देशार्थत्वमपि द्रष्टव्यम्। अत एव च वक्ष्यति प्रमाणानामित्यनेन उद्देशे सिद्धे[1] इति।

यथासम्भवं नारायणविशेषणकृत्यमाह- **नारायणस्यैवेत्यादिना ॥** विशेषनिषेधस्य शेषाभ्यनुज्ञापूर्वकत्वन्यायेन दोषान्तरसत्वापादकतया भासमानत्वाद् अनामयपदस्य तद्व्यावृत्त्यर्थतया आमयपदं दोषान्तरोपलक्षणार्थत्वेन व्याचष्टे- **आमयपदमिति ॥** वक्ष्यामीत्येतावता सिद्धे प्रशब्दानर्थक्यमाशङ्क्याह- **प्रवक्ष्यामीतीति ॥** अत्रोद्देशविभागपरीक्षाद्युपयोगि यत् तत्सङ्ग्रहायोपसर्गः। प्रमाणोद्देशादिव्यतिरिक्तसङ्ग्रहाय आदिशब्दः। उद्देशादिसङ्ग्रहार्थत्वमुपपादयति- **नहीति ॥**

## लक्षणलक्षणप्रयोजने

**(टी.) लक्ष्यमात्रव्यापको धर्मो लक्षणम्। तदुक्तिः शब्दव्यवहारार्था। सास्नादिमान् गौः इति ज्ञातलक्षणो हि यं पिण्डं सास्नादिमन्तं पश्यति तं गोशब्दवाच्यं प्रत्येति। यदा तु 'अयं गौः' इत्युपदेशादिना व्युत्पत्तिः तदाऽपि व्यक्तिविशेष एव न सर्वत्र। तत्रोपदेशाद्यभावात्। अतस्तत्र व्यक्तिविशेषे**

---

१. अन्वयव्यतिरेकिणेति विशेषः। प्रमाणानामित्यनेनोद्देशसिद्धिः। नाममात्रेण वस्तुसङ्कीर्तनमुद्देशः - इति व्याख्यातृसम्मतः टीकापाठ इति भाति।

**व्युत्पन्नः तदन्यत्रापि व्युत्पित्सुः तद्धर्मेषु व्यवहारान् आलोच्य, व्यभिचारिणोऽव्यापकांश्च परिहृत्य, लक्षणभूतमेकं गृहीत्वा, तद्वत्सु गोशब्दसम्बन्धं गृह्णाति । प्राचीनपक्षे केवलव्यतिरेकिणा अत्र अन्वय-व्यतिरेकिणेति विशेषः ।**

(वि.टि.) लक्षणपदप्रवृत्तिनिमित्तमाह- **लक्ष्येति** ॥ लक्ष्य एव व्यापकः । लक्ष्येतरावृत्तित्वे सति सकललक्ष्यवृत्तिधर्मो लक्षणमित्यर्थः । ननु भवन्मते लक्ष्यवृत्तिधर्मो लक्षणमित्येवास्तु । लक्ष्यतापर्याप्त्यधिकरणताकस्यालक्ष्य-वृत्तित्वाभावात् । द्वितीयव्यक्तेर्लक्ष्यत्वाभावात् । लक्ष्यत्वे वा लक्षणस्या-सम्भवः । लक्षणस्य गोत्वादेः सकलगोव्यक्त्यादिवृत्तित्वाभावात् । अनुगत-जातेरनङ्गीकारात् । उपाधेरप्यननुगतजातिघटितत्वेनाननुगतत्वात् । किञ्च गोव्यक्तीनां गोत्वं लक्षणं द्रव्यत्वं न लक्षणमिति कथं विभागः । तत्तद्व्यक्तेः तत्तद्व्यक्तिवृत्तिगोत्वस्येव तत्तद्व्यक्तिवृत्तिद्रव्यत्वस्यापि लक्षणत्वसम्भवात् । एवमेव द्रव्यव्यक्तीनां द्रव्यत्वं लक्षणं न गोत्वादिकमित्ययमपि विभागोऽनुपपन्नः। गोत्वादिद्रव्यत्वयोस्तुल्यत्वात् । अपि च पृथिवीत्वावच्छिन्ने पृथिवीत्वा-वच्छिन्नेतरभेदकत्वं पृथिवीलक्षणत्वं गन्धवत्त्वस्य न स्यात् । पृथिवीत्वस्य पक्षतावच्छेदकस्याननुगतत्वेन सर्वव्यक्तेरपक्षत्वात् । साध्यतावच्छेदक-हेतुतावच्छेदकयोरननुगतत्वेन दृष्टान्तविलोपापाताच्च । गन्धत्वस्याननुगतत्वेन गन्धवत्त्वस्याप्यननुगतत्वात् । न च तत्तद्व्यक्तौ तत्तद्व्यक्तीतरभेदानुमिति-जनकत्वमेव गन्धवत्त्वस्य पृथिवीलक्षणत्वमिति वाच्यम् । व्यतिरेकसहचारग्राह्याया यत्र गन्धवत्त्वं तत्रेतरभेद इत्यन्वयव्याप्तेर्ग्रहकाल एव सिद्धत्वात् सिद्धसाधनापत्तेः। तद्व्यक्तौ साध्यस्य ग्रहात् । अप्रयोजकत्वेन तादृगन्वयव्याप्त्यग्रहप्रसङ्गाच्च । न च पृथिवीगन्धयोः कार्यकारणभाव एव विपक्षबाधकतर्क इति वाच्यम् । अनुगत-धर्माभावेन प्रतिव्यक्तिकार्यकारणभावस्यैव ग्रहीतुमशक्यत्वात् । न

चानुगतधर्माभावेन प्रत्यक्षतस्तदग्रहेऽपि शब्दादेव सकलपृथिवीगन्धव्यक्त्युपस्थितेः सत्वात्[1] कार्यकारणभावग्रहः स्यादिति वाच्यम् । तस्यासार्वत्रिकत्वात् । अनुगतप्रवृत्तिनिमित्ताभावेन तस्यापि सकलव्यक्त्यनुपस्थापकत्वाच्चेति चेत् ।

मैवम् । लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगीतरवृत्तिवृत्तिसादृश्या-निरूपकत्वे सति लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगियावद्वृत्तिवृत्ति-सादृश्यप्रतियोगित्वस्य लक्षणत्वस्य विवक्षितत्वात्[2] । तेन च प्रतिव्यक्ति-विश्रान्तत्वाविशेषेऽपि पृथिवीव्यक्तेर्द्रव्यत्वं न लक्षणम् । गन्धवदसदृशवृत्ति-वृत्तिसादृश्यनिरूपकत्वात् । न वा घटत्वं तल्लक्षणम् । गन्धवत्सदृशयावद्व्यक्ति-वृत्तिवृत्तिसादृश्यानिरूपकत्वात् । इदमेव घटत्वद्रव्यत्वयोरव्याप्तत्वमतिव्याप्तत्वं च । अत एव च न प्रमेयत्वादौ लक्षणपदप्रयोगः । तत्र प्रमेयत्वादिसमशीलाभि-धेयत्वादिलक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगीतराप्रसिद्धेः । न च यन्निष्ठं यल्लक्ष्यतावच्छेदकमादाय लक्षणपदप्रवृत्तिनिमित्तमिदं निरुच्यते[3] तल्लक्ष्यता-वच्छेदकाश्रये स्ववृत्तिसादृश्यप्रतियोगित्वाभावेन लक्षणस्य तदवृत्तित्वादसम्भवो दोषः । स्ववृत्तिसादृश्यनिरूपकत्वस्य तत्प्रतियोगित्वस्य स्वस्मिन्नपि सत्वात् । न चैवं तद्व्यक्तित्वादेर्लक्षणत्वं न स्यात् । तत्समानशीललक्ष्यतावच्छेदकस्य[4] सादृश्यानभिव्यञ्जकत्वेन तदभिव्यञ्जकत्वघटितलक्षणपदप्रवृत्तिनिमित्ताभावादिति

---

१. उपस्थितौ सत्याम्

२. लक्ष्या गौः । लक्ष्यतावच्छेदकं गोत्वम् । तदभिव्यङ्ग्यसादृश्यं पुरोवर्तिगोनिष्ठम् । सादृश्यप्रतियोगिन्यः सकलगोव्यक्तयः । प्रतियोगीतराणि अश्वादीनि । तद्वृत्तीनि एकशफवत्वादीनि । तद्वृत्ति यत् सादृश्यं तदनिरूपकं सास्नादिमत्त्वमिति विशेषणदलम् । एवमेव लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगियावद्व्यक्तयः सकलगोव्यक्तयः । तद्वृत्ति यत् सास्नादिमत्त्वं तद्वृत्ति यत् सादृश्यं तन्निरूपकत्वं पुरोवर्तिगोव्यक्ति-निष्ठसास्नादिमत्त्वस्येति विशेष्यदलमिति गोलक्षणे सास्नादिमत्त्वे लक्षणसमन्वयः ।

३. निरूप्यते ।

४. तत्समानशीलतल्लक्ष्यतावच्छेदकस्य

वाच्यम् । इतरभेदानुमितिजनकत्वपुरस्कारेण तत्र लक्षणपदप्रयोगात् । तद्व्यक्तिमात्रवृत्तित्वात् सकललक्ष्यवृत्तित्वाभावेन तत्र त्वयाऽप्येवमेवावश्यं वक्तव्यत्वात् ।

यद्वा लक्ष्यतावच्छेदकनिष्ठसादृश्यप्रतियोग्यनाश्रयवृत्तिवृत्तिसादृश्यानिरूपकत्वे सति लक्ष्यतावच्छेदकनिष्ठसादृश्यप्रतियोग्याश्रययावद्व्यक्तिप्रतियोगिकसादृश्याश्रयत्वं लक्षणत्वम्[1] । न चैतदज्ञानेऽपि लक्षणपदप्रयोगात् नैतल्लक्षणत्वमिति वाच्यम् । असिद्धेः । अन्यथा त्वदुक्तमपि लक्षणत्वं न स्यात् । तदप्रतिसन्धानेऽपि लक्षणपदप्रयोगादिति वक्तुं शक्यत्वात् । एवं च तत्तत्पृथिवीव्यक्तेस्तत्तत्पृथिवीत्वमननुगतमेव लक्षणम् । इतरव्यावृत्तलक्षणपदप्रयोगस्तूक्तोपाधिनियम्यः । यथा अनुगतजातिवादिमतेऽननुगतमेव पृथिवीजलत्वादिकं लक्षणम् । अनुगतलक्षणपदप्रयोगस्तूपाधिविशेषेणैवेति । एतावांस्तु विशेषः । मन्मते पृथिवीव्यक्तावपि पृथिवीत्वमननुगतं त्वन्मते त्वेकमितीति दिक् ।

यच्चोक्तं पृथिवीत्वावच्छिन्ने इतरभेदानुमापकत्वं पृथिवीलक्षणत्वं गन्धवत्त्वस्य न स्यात्, पृथिवीत्वस्याननुगतत्वेन सर्वव्यक्तेरपक्षत्वादिति । तन्न । पृथिवीत्वावच्छिन्ने स्वार्थानुमितिस्तथा न स्यादिति वा परार्थानुमितिस्तादृशी न स्यादिति वा । नाद्यः । स्वार्थानुमाने हि पक्षतावच्छेदकस्यानुगतस्योपयोगः तावतां प्रतिस्वं ज्ञानासम्भवेन सामान्यप्रत्यासत्तीभूय तावदुपस्थापकतया ।

---

१. पूर्वं लक्षणनिष्ठं सादृश्यमादाय लक्षणं निरुक्तम् । इदानीं लक्ष्यतावच्छेदकसादृश्यमप्यादाय निरुच्यते । सास्नादिमत्त्वे लक्षणसमन्वयः । लक्ष्यतावच्छेदकं गोत्वं तन्निष्ठसादृश्यप्रतियोगीनि सकलगोत्वानि तदनाश्रया अश्वादयः, तद्वृत्ति यदेकशफत्वादि तद्वृत्तिसादृश्यानिरूपकं सास्नादिमत्त्वमिति विशेषणदलम् । लक्ष्यतावच्छेदकनिष्ठसादृश्यप्रतियोग्याश्रया यावत्यः सकलगोव्यक्तयः । तद्वृत्तीनि यावन्ति सास्नादिमत्त्वानि तत्प्रतियोगिकसादृश्याश्रयत्वं पुरोवर्तिगोनिष्ठसास्नादिमत्त्वस्येति विशेष्यदलमिति सर्वमवदातम् । (स)

तच्चास्मन्मतेऽन्यथैवोपपन्नमतः किं तेन। तथाहि। अस्मन्नये सर्वपृथिवीव्यक्तौ सकलपृथिवीव्यक्तिनिरूपितसादृश्यं पदार्थान्तरमस्ति। अपदार्थान्तरं वाऽस्तु। तथा च पुरोवर्तिपृथिवीव्यक्तिनिष्ठसादृश्यप्रतियोगित्वेन सामान्येन सकलपृथिवीव्यक्तीनामुपस्थितेः। न चैवं सामान्यलक्षणायाः स्वप्रकारकज्ञानजनकत्वनियमेनोपस्थिततद्धर्मावच्छेदेनैवानुमितिः स्यात् न तु पृथिवीत्वावच्छेदेनेति वाच्यम्। स्वप्रकारकज्ञानजनकत्वनियमस्यासिद्धेः। न च तथासति अतिप्रसङ्गः। एतत्सादृश्यप्रतियोगित्वेन तत्सादृश्याभिव्यञ्जकधर्मप्रकारकज्ञानत्वेन[1] कार्यकारणभावस्यैवातिप्रसङ्गभञ्जकत्वात्। न च तत्समानाधिकरणधर्मस्यैव तदभिव्यञ्जकत्वेन तस्य च सर्वत्रावृत्तित्वेनापरव्यक्तीनां किंधर्मप्रकारकोपस्थितिः स्यादिति वाच्यम्। अभिव्यञ्जकधर्मप्रकारकज्ञानत्वेनाभिव्यञ्जकधर्मनिष्ठसादृश्यप्रतियोगिधर्मप्रकारकज्ञानस्य विवक्षितत्वात्। एवं सकलव्यक्त्युपस्थितौ सत्यां तत्र च प्रमाणान्तरेण पक्षधर्मताज्ञाने जाते स्वार्थानुमितिरविकला। एतावांस्तु विशेषः। तव पक्षतावच्छेदकेनैव धर्मेण सकलव्यक्त्युपस्थितिः मम तु धर्मान्तरेणेति। अनुमितिस्तु प्रत्येकधर्मावच्छेदेनैव जायते घटपटावनित्याविितिवत्।

न द्वितीयः। पृथिवीपदात् सकलपृथिवीव्यक्त्युपस्थितौ सत्यां परार्थानुमित्यविरोधात्। न चानुगतधर्मस्य प्रवृत्तिनिमित्तस्याभावेन कथं तावद्व्यक्त्युपस्थितिरिति वाच्यम्। तत्तद्व्यक्तिवृत्तिनैव पदप्रवृत्तिनिमित्तेनोपस्थितिसम्भवात्। न च शक्तिग्रहकाले तत्तद्धर्मविशिष्टत्वेनानुपस्थितत्वात् कथं शक्तिग्रह इति वाच्यम्। पूर्वोक्तसामान्यलक्षणयैव तथोपस्थितिसम्भवात्। न चैवं नानार्थाविशेषः। एकोच्चारणगर्भशक्तिमत्त्वेन विशेषात्। न चैवं पुष्पवत्पदाद्यविशेषः। सदृशनानाधर्मप्रवृत्तिनिमित्तवत्त्वेनैव ततो विशेषात्। न च सादृश्यप्रतियोगित्वमेव एकत्वात् पदप्रवृत्तिनिमित्तमास्तामिति वाच्यम्। यत्प्रकारिका

---

१. एतत्साद्दश्याभिव्यञ्जकधर्मप्रकारकज्ञानत्वेन

हि प्रतीतिः पदजन्या तस्यैव प्रवृत्तिनिमित्तत्वात् । न च सादृश्यप्रतियोगित्वं तथा । अन्यथा तवापि घटपदे सत्वस्यैव प्रवृत्तिनिमित्तत्वापत्तेः ।

न च पृथिवीत्वस्याननुगतत्वेन पृथिवीतरभेदस्याप्यननुगतत्वात् कथं व्याप्तिग्रह इति वाच्यम् । तावद्धर्मावच्छिन्नभेदवद्भेदत्वस्यानुगतत्वात् । घटपटोभय-प्रतियोगिकभेदवत्प्रतियोगिकभेदत्वस्येव । न च तावद्धर्मावच्छिन्नभेद-स्याधिकरणरूपत्वादननुगमतादवस्थ्यमिति वाच्यम् । तत्राभावभिन्नत्वस्यैवा-नुगतस्य सम्भवात्[1] । अननुगतत्वेऽपि तावद्धर्मावच्छिन्नभेदवद्वैसादृश्य-प्रतियोगित्वेनोपस्थितानां भेदग्रहसम्भवात्[2] । न चानुगतव्यापकतावच्छेदका-भावः । व्याप्तिग्रहप्रयोजकीभूतोपस्थित्या तस्यान्यथासिद्धत्वात् । तस्याश्चान्यथैवोपपादितत्वात् । अत एवान्वयिनि वह्नित्वस्याननुगतत्वेऽपि न दोषः । यत्किञ्चिद्वह्निसादृश्यनिरूपकत्वसामान्यलक्षणया तत्तद्वह्नित्वेनोपस्थित-सकलवह्निव्यक्तिनिरूपितव्याप्तिग्रहसम्भवात् । न चैवं दृष्टान्तविरोधः । साध्यतावच्छेदकसदृशधर्मावच्छिन्नाप्रतीतेर्दृष्टान्तविरोधपदार्थत्वात् । तादृक्प्रतीतेरेव दृष्टान्तत्वप्रयोजकत्वात् । एवमेव हेतावप्यननुगमपरिहारो[3] द्रष्टव्यः। अत एव हेतुतावच्छेदकस्याननुगमेऽपि शब्दसाम्यमात्रेणानुमानप्रवृत्तौ वाग् विषाणिनी गोत्वादित्याद्यप्यनुमानं स्यादिति परास्तम् । व्याप्तिग्रहजनकीभूतोप-स्थितिजनकसादृश्यप्रतियोगित्वस्य स्वरूपसतो नियामकत्वात् । प्रकृते गो-वाग्वृत्तिगोत्वस्यासदृशत्वात्[4] । अत एव नाप्रयोजकता । यत्किञ्चित्पृथिवी-गन्धव्यक्तिनिष्ठसादृश्यप्रतियोगित्वेन सकलपृथिवीगन्धव्यक्त्युपस्थितौ तत्तद्वृत्तिपृथिवीत्वगन्धत्वावच्छेदेन कार्यकारणभावग्रहस्यैव विपक्षबाधकत्वात् । न च कार्यकारणभावावच्छेदकाननुगमो दोषः । दृष्टान्तस्थलाभावात् । मन्मते सर्वत्राननुगतस्यैवावच्छेदकत्वात् । तत्कर्तव्यसकलोपस्थितेरतिप्रसङ्गाभावस्य च

१. अनुगतत्वसम्भवात्
२. उपस्थितानां ग्रहसम्भवात्
३. अननुगमोद्धारः
४. गोवाग्वृत्तिगोत्वयोरित्यर्थः (सं.)

सादृश्यप्रतियोगित्वेनैव कृतत्वाच्च । ननु सादृश्यप्रतियोगित्वं ज्ञातमासत्तिः । तज्ज्ञानं च प्रतियोगिज्ञानाधीनम् । तथा च प्रतियोगिज्ञाने सति सादृश्यज्ञानं तस्मिंश्च ज्ञाते (सति?) सादृश्यप्रतियोगित्वेन प्रतियोगिज्ञानमित्यन्योन्याश्रय इति चेत् । न । सामान्यस्य ज्ञातस्यैव आसत्तित्वे मानाभावात् । प्रत्यासत्तेरज्ञाताया एव प्रत्यक्षजनकत्वावधारणाच्च । न चाज्ञातस्यासत्तित्वे संशयो न स्यात् । स्वरूपसता तेन धर्मेण संशयात् पूर्वं घटत्वादिप्रकारकज्ञानजननादिति वाच्यम् । पुरोवृत्त्यंशे तस्यासत्तित्वाभावात् । भावे वा संशयजनकदोषस्यैव प्रतिबन्धकत्वात् । अन्यथा संशयार्थं कोटिज्ञानस्यावश्यकत्वेनासत्तिज्ञानसम्भवात् तत्प्रकारकज्ञानापत्त्या तवापि संशयो न स्यात् । न च निश्चयसामग्रीतः संशयसामग्री बलवतीति वाच्यम् । धर्मिज्ञानपूर्वमेव यदा कोटिज्ञानं तदा धर्मिज्ञानाभावेन संशयसामग्र्यभावात् धर्मिज्ञानस्यैव तत्प्रकारकत्वापत्तेः । न च सादृश्यप्रतियोगित्वं तत्तत्प्रतियोगिरूपस्वरूपसम्बन्धविशेषः । स चाननुगत इति कथं तावद्व्यक्त्युपस्थितिरिति वाच्यम् । प्रतियोगित्वेन सम्बन्धेन सादृश्यस्यैवासत्तित्वमिति तदर्थत्वात् । न च सम्बन्धाननुगमो दोषः । सम्बन्ध्यनुगमे[1] तस्यादोषत्वात् । अन्यथा दण्डित्वसामान्यलक्षणया सकलदण्ड्यनुपस्थितिप्रसङ्गात् । दण्डसंयोगस्याननुगतत्वादिति सङ्क्षेपः ।

क्रियावत्त्वादेर्द्रव्यलक्षणत्वपरिहाराय- **सकलेति**[2] ॥ प्रमेयत्वादिवारणाय प्रथमदलम् । अत एव वक्ष्यति 'व्यभिचारिणोऽव्यापकांश्च परिहृत्य' इति । इदं चार्थलक्षणम् । शब्दपरत्वे तत्प्रतिपादकवाक्यत्वं लक्षणं द्रष्टव्यम् । शब्दव्यवहारार्थेति शब्दव्यवहर्तव्यत्वज्ञानार्थेत्यर्थः । लक्षणोक्तेः शब्दवाच्यत्वज्ञानहेतुतामुपपादयति- **सास्नादिमानिति** ॥ सास्नादिमानिति सामान्यतो गोशब्दवाच्यज्ञानेऽपि व्यक्तिविशेषस्याज्ञानात् । या सास्नादिमती सा गौरित्युक्ते

१. सम्बद्धाननुगमे

२. एतत्प्रतीकसूचितं टीकावाक्यं नोपलभ्यते ।

'यद्वृत्तयोगः प्राथम्यम्' इत्याद्युद्देश्यलक्षणम्[१]। 'तद्वृत्तमेवकारश्च स्यादुपादेय-लक्षणम्' इति न्यायेन प्रसिद्धलक्षणोपदेशेनाप्रसिद्धतत्तच्छब्दवाच्यत्वविधानात्। उद्देश्यस्य च लक्षणस्य धूमादिवद् व्याप्यत्वावगमात् यावति लक्षणं तावद् गोशब्दवाच्यमित्येव व्यक्तिविशेषस्य वाच्यत्वं श्रोताऽवधारयतीत्यर्थः[२]। शृङ्गग्राहितया[३] अयं गोशब्दवाच्य इति केनचिदुक्ते अनन्तरं तद्धर्मवत्यन्यत्र व्यवहारमालोच्यावापोद्वापक्रमेण[४] यत्र सास्नाद्यव्यभिचारज्ञानं तद्वति गोशब्द-वाच्यज्ञानं तत्र लक्षणोक्तेर्व्यभिचारात् कथं शब्दवाच्यत्वज्ञानहेतुतेत्याशङ्क्य लक्षणज्ञानं सर्वसाधारणशक्तिग्रहाव्यभिचारि, स्वतो लक्षणाज्ञं प्रति तु लक्षणज्ञापनद्वारा वाच्यत्वज्ञाने लक्षणोक्तिरुपयोगिनीति परिहारं सूचयितुमाह-**यदा त्विति॥**

**(टी.) नाममात्रेण वस्तुसङ्कीर्तनमुद्देशः। स च लक्षणाद्युक्तिसम्भावनार्थः। अनुद्दिश्य कस्य [५]लक्षणादि ब्रूयात्। विधा विभागः। तदुक्तिरवान्तरोद्दे-शार्था। युक्तायुक्तचिन्ता परीक्षा। सोद्देशविषया न सम्भवति। फलाभावेन नाममात्रे विवादायोगात्। लक्षणपरीक्षा तस्य लिङ्गत्वनिश्चयार्था। न [६]ह्यसंभवाव्याप्त्यादिलक्षणस्वरूपासिद्धि[७]भागासिद्धिव्यभिचारापरिहारे लिङ्गता निश्चीयते। विभागपरीक्षा न्यूनाधिकसङ्ख्याव्यवच्छेदमुखेन विभाग-समर्थनार्था। बुद्धिदोषनिवृत्तिपर्यन्ता परीक्षायाः परीक्षा तत्सौष्ठवसिद्ध्यर्था। द्विधा चोद्देशादयः सामान्यतो विशेषतश्चेति।**

**प्रमाणलक्षणस्यान्यैरेवोक्तत्वात् किमपूर्वनिर्माणेनेत्यतो वा प्रवक्ष्यामि इत्युक्तम्। अन्योक्तीनामप्रकृष्टतां वक्ष्यति।**

---

१. यद्वृत्तः योगः प्राथम्यमित्याद्युद्देशलक्षणम् / यद्वृत्तयोगः प्राप्यत्वमित्याद्युद्देशलक्षणम्

२. अवगच्छतीत्यर्थः

३. शृङ्गग्राहिकया

४. आवापोद्धारक्रमेण

५. 'लक्षणम्' (पा.)

६. असम्भवाव्याप्त्यतिव्याप्तिलक्षण.... (पा.)

७. स्वरूपभागासिद्धि.... (पा.)

## लक्षणविभागः

**द्विविधं लक्षणम्, यावल्लक्ष्यभावि अयावल्लक्ष्यभावि चेति। तत्राद्यं यथा, 'पृथुबुध्नोदराकारो घटः' इति। द्वितीयं यथा, 'भोगायतनं शरीरम्' इति। तत्राद्यमेव व्युत्पाद्यम्। तस्यैव सार्वत्रिकव्यवहारोपयोगित्वादिति भावेनोक्तम्-स्वलक्षणमिति ॥ तदेव हि स्वरूपभूतं लक्षणं यत् यावल्लक्ष्यभावीति।**

**(वि.टि.)** उपसर्गसङ्गृहीतोद्देशजिज्ञासायामाह- **नामेत्यादि** ॥ व्यावर्तक-धर्मातात्पर्यकलक्षणोक्त्युद्देश्यकशब्द इत्यर्थः। तेन लक्षणविभागवाक्ययोर्व्यवच्छेदः। प्रथमस्य सजातीयव्यावर्तकपरत्वात्। द्वितीयस्य सजातीयविभाजकपरत्वात्। विभागस्य विशेषलक्षणोक्त्यर्थत्वमप्यस्तीति[1] विशेष्यभागे दत्तेऽपि तत्रातिव्याप्तिसम्भवात्[2]। उदासीनघटादिपदेऽतिव्याप्तिवारणाय विशेष्यभागः। लक्षणोक्त्यनुकूले ताल्वादिव्यापारेऽतिप्रसङ्गपरिहाराय शब्दपदम्। मात्रशब्दस्य व्यावर्तकधर्मातात्पर्यकत्वार्थकत्वं स्फुटं मत्या समित्यनेनोक्तं लक्षणोक्त्यर्थत्वं सूचयितुमाह- **स इति** ॥ आदिशब्देन विभागपरिग्रहः। विधेति सजातीयविभाजकधर्मतात्पर्यकविशेषोद्देश्यकः शब्द इत्यर्थः। सामान्योद्देशवारणाय प्रथमो भागः। लक्षणवाक्यवारणाय द्वितीयः। उत्तरविशेषणसूचनायैव[3] तदुक्तिरित्युक्तम्। **युक्तेति** ॥ शास्त्रावयवभूतोपपन्नत्वानुपपन्नत्वविचार इत्यर्थः। अन्यस्यालक्ष्यत्वात्[4]। विषयविशेषानिर्देशादेवोद्देशविषयत्वभ्रान्तिं वारयितुं चिन्ताविषयं विवेचयति- **सेत्यादिना** ॥ बुद्धिदोषोऽयुक्तार्थविषयत्वम्। सौष्ठवमप्रामाण्यशङ्कारहितत्वम्। उद्देशस्यैक्येन विभागलक्षणकथनेऽवान्तरोद्देशार्थत्वविशेषणमयुक्तमित्याशङ्क्याह- **द्विधा चेति** ॥ प्रसङ्गाल्लक्षणादिद्वैविध्यकथनाय आदिशब्दः।

---

१. विशेषलक्षणोद्देश्यार्थत्वमप्यस्तीति
२. विशेषणदलमिति पूरणीयम् (स)
३. उत्तरविशेषसूचनायैव
४. अन्यस्यालक्षणत्वात्

उद्देशं विना लक्षणस्य वक्तुमशक्यत्वात् परीक्षां च विना प्रमाणविवेकस्यासिद्धेः अर्थादेव तत्सङ्ग्रहसिद्धेस्तदर्थत्वं नातिप्रयोजनमुपसर्गस्य मत्वाऽन्यथा व्याचष्टे- **प्रमाणेति** ॥ प्रकर्षस्यावध्यपेक्षायामाह- **अन्यैरिति** ॥ लक्षणं वक्ष्यामीत्येतावता कृतार्थत्वे स्वपदानर्थक्यमाशङ्क्य तत्सार्थक्यं दर्शयितुमाह- **द्विविधमिति** ॥ **द्वितीयमिति** भोगाभावदशायामभावादिति भावः । **सार्वत्रिकेति** सर्वकालीने-त्यर्थः । स्वपदेन कथं यावल्लक्ष्यभावित्वलाभ इत्यत आह- **तदिति** ॥ (यद्यपि वक्ष्यमाणप्रमाणलक्षणस्याप्यर्थविषयीकारित्वस्य फलोपधानपक्षे स्वलक्षणत्व-मयुक्तम् । लिङ्गादौ सत्यपि सिद्धसाधनादावनुमितिविरहेण तदसम्भवात् । स्वरूपयोग्यत्वस्य तथात्वे शरीरलक्षणेऽपि तुल्यम् । तथापि फलोपधानपक्ष एव शरीरलक्षणस्य तथात्वमुक्तमिति ध्येयम् ।)

### प्रमाणसामान्यलक्षणम्

**(टी.) प्रमाणानामित्युद्देशे सिद्धे प्रमाणसामान्यलक्षणमाह -**

## यथार्थं प्रमाणम्

**प्रमाणमिति लक्ष्यनिर्देशः । यथार्थमिति लक्षणोक्तिः । एवमुत्तरत्रापि ज्ञातव्यम् । यथार्थं यथावस्थितार्थविषयीकारि । अर्थविषयीकारित्वमात्रस्य संशयविपर्ययसाधारण्याद् विशेषणोपादानम् । अर्थविषयीकारित्वेनैव प्रमेयादिव्युदासः । अर्यत इत्यर्थो ज्ञेयमुच्यते । अतो न गम्यविषयीकारि-गतावतिव्याप्तिः ।**

### प्रमाणविभागः

**तद्विभागमाह-**

## तद् द्विविधम्

**प्रमाणानामानन्त्येऽपि साक्षात्पारम्पर्येण याथार्थ्यज्ञापनार्थोऽयं विभागः । एतदेव दर्शयन् द्वे विधे उद्दिशति-**

## केवलमनुप्रमाणं च

**साक्षाद् यथावस्थितार्थविषयीकारि केवलम् । परम्परया तादृशमनुप्रमाणमिति ।**

(वि.टि.) उद्देशं विना लक्षणकरणमयुक्तमित्याशङ्क्याह- **प्रमाणानामिति** ॥ यथार्थपदस्य प्रथमं प्रयोगात् पूर्वं स्वपरेत्यादेर्द्वितीयव्याख्याने लक्षण-सूचनार्थत्वस्योक्तत्वात् पूर्वपदस्यैव लक्ष्यपरत्वभ्रान्तिं वारयितुमाह- **प्रमाण-मिति** ॥ यद्वृत्तयोगः प्राथम्यमित्याद्युद्देशलक्षणमिति न्यायेनात्र यथार्थस्योद्देश-त्वावगमात् प्रसिद्धस्यैवान्यत्रोद्देश(श्य)त्वदर्शनात् प्रसिद्धत्वेन यथार्थस्यैव लक्षणत्वमित्यर्थः[१] । पूर्वमित्यादावपि प्रथमोक्तस्य लक्ष्यत्वभ्रान्तिं[२] वारयितुमाह-**एवमिति** ॥ प्रसिद्धत्वेनैव लक्ष्यत्वमेवंशब्देन[३] परामृश्यते । प्रकृते प्राथम्य-स्योद्देश्यत्वावगतिद्वारा प्रसिद्धताज्ञाने उपयोगः । पूर्वमित्यादौ तु लक्षण-पदविवक्षया[४] (इति) नैवं भ्रान्तिरिति तात्पर्यम् ।

घटाद्यर्थमतिक्रम्यापि ज्ञानस्यात्मनि वृत्तेरव्ययीभावार्थानतिवृत्तेरयुक्तता-माशङ्क्याह- **यथार्थमिति** ॥ विषयीकारेऽनतिक्रमो विवक्षित इत्यर्थः । एवं च येन सम्बन्धेन यद् यत्रास्ति तेन सम्बन्धेन तत्र तद्विषयीकारित्वं फलितम् । यथावस्थितेत्यस्य प्रयोजनमाह- **अर्थविषयीकारित्वेति** ॥ संशयेत्युपलक्षणम् । तत्साधनमपि द्रष्टव्यम् । अर्थविषयीकारित्वस्य ज्ञानजनकतया इन्द्रिय इवार्थेऽपि सत्वादतिव्याप्तिमाशङ्क्याह[५]- **अर्थेति** ॥ नन्वर्थविषयीकारित्वं यदि विषयविषयिभावसम्बन्धः तदेच्छायामतिव्याप्तिः, यदि चार्थविषयकज्ञानत्वं

---

१. लक्ष्यत्वमित्यर्थः  २. लक्षणत्वभ्रान्तिम्  ३. लक्षणत्वमेवंशब्देन

४. लक्षणपरत्वविवक्षया/लक्षणीयपदविवक्षया / लक्ष्यपरत्वविवक्षया

५. ज्ञानजनकतयेन्द्रियाणामर्थविषयीकारित्वे नैयायिकमतरीत्याऽर्थस्यापि ज्ञानजनकत्वेन तत्रापि अर्थविषयीकारित्वं भवतीत्यतिव्याप्तिशङ्का

उद्देशं विना लक्षणस्य वक्तुमशक्यत्वात् परीक्षां च विना प्रमाणविवेकस्यासिद्धेः अर्थादेव तत्सङ्ग्रहसिद्धेस्तदर्थत्वं नातिप्रयोजनमुपसर्गस्य मत्वाऽन्यथा व्याचष्टे- **प्रमाणेति** ॥ प्रकर्षस्यावध्यपेक्षायामाह- **अन्यैरिति** ॥ लक्षणं वक्ष्यामीत्येतावता कृतार्थत्वे स्वपदानर्थक्यमाशङ्क्य तत्सार्थक्यं दर्शयितुमाह- **द्विविधमिति** ॥ **द्वितीयमिति** भोगाभावदशायामभावादिति भावः । **सार्वत्रिकेति** सर्वकालीनेत्यर्थः । स्वपदेन कथं यावल्लक्ष्यभावित्वलाभ इत्यत आह- **तदिति** ॥ (यद्यपि वक्ष्यमाणप्रमाणलक्षणस्याप्यर्थविषयीकारित्वस्य फलोपधानपक्षे स्वलक्षणत्वमयुक्तम् । लिङ्गादौ सत्यपि सिद्धसाधनादावनुमितिविरहेण तदसम्भवात् । स्वरूपयोग्यत्वस्य तथात्वे शरीरलक्षणेऽपि तुल्यम् । तथापि फलोपधानपक्ष एव शरीरलक्षणस्य तथात्वमुक्तमिति ध्येयम् ।)

### प्रमाणसामान्यलक्षणम्

**(टी.) प्रमाणानामित्युद्देशे सिद्धे प्रमाणसामान्यलक्षणमाह -**

## यथार्थं प्रमाणम्

**प्रमाणमिति लक्ष्यनिर्देशः । यथार्थमिति लक्षणोक्तिः । एवमुत्तरत्रापि ज्ञातव्यम् । यथार्थं यथावस्थितार्थविषयीकारि । अर्थविषयीकारित्वमात्रस्य संशयविपर्ययसाधारण्याद् विशेषणोपादानम् । अर्थविषयीकारित्वेनैव प्रमेयादिव्युदासः । अर्यत इत्यर्थो ज्ञेयमुच्यते । अतो न गम्यविषयीकारिगतावतिव्याप्तिः ।**

### प्रमाणविभागः

**तद्विभागमाह-**

## तद् द्विविधम्

**प्रमाणानामानन्त्येऽपि साक्षात्पारम्पर्येण याथार्थ्यज्ञापनार्थोऽयं विभागः । एतदेव दर्शयन् द्वे विधे उद्दिशति-**

## केवलमनुप्रमाणं च

**साक्षाद् यथावस्थितार्थविषयीकारि केवलम् । परम्परया तादृशमनुप्रमाणमिति ।**

(वि.टि.) उद्देशं विना लक्षणकरणमयुक्तमित्याशङ्क्याह- **प्रमाणानामिति** ॥ यथार्थपदस्य प्रथमं प्रयोगात् पूर्वं स्वपरेत्यादेर्द्वितीयव्याख्याने लक्षण-सूचनार्थत्वस्योक्तत्वात् पूर्वपदस्यैव लक्ष्यपरत्वभ्रान्तिं वारयितुमाह- **प्रमाण-मिति** ॥ यद्वृत्तयोगः प्राथम्यमित्याद्युद्देशलक्षणमिति न्यायेनात्र यथार्थस्योद्देश-त्वावगमात् प्रसिद्धस्यैवान्यत्रोद्देश(श्य)त्वदर्शनात् प्रसिद्धत्वेन यथार्थस्यैव लक्षणत्वमित्यर्थः[1] । पूर्वमित्यादावपि प्रथमोक्तस्य लक्ष्यत्वभ्रान्तिं[2] वारयितुमाह- **एवमिति** ॥ प्रसिद्धत्वेनैव लक्ष्यत्वमेवंशब्देन[3] परामृश्यते । प्रकृते प्राथम्य-स्योद्देश्यत्वावगतिद्वारा प्रसिद्धताज्ञाने उपयोगः । पूर्वमित्यादौ तु लक्षण-पदविवक्षया[4] (इति) नैवं भ्रान्तिरिति तात्पर्यम् ।

घटाद्यर्थमतिक्रम्यापि ज्ञानस्यात्मनि वृत्तेरव्ययीभावार्थानतिवृत्तेरयुक्तता-माशङ्क्याह- **यथार्थमिति** ॥ विषयीकारेऽनतिक्रमो विवक्षित इत्यर्थः । एवं च येन सम्बन्धेन यद् यत्रास्ति तेन सम्बन्धेन तत्र तद्विषयीकारित्वं फलितम् । यथावस्थितेत्यस्य प्रयोजनमाह- **अर्थविषयीकारित्वेति** ॥ संशयेत्युपलक्षणम् । तत्साधनमपि द्रष्टव्यम् । अर्थविषयीकारित्वस्य ज्ञानजनकतया इन्द्रिय इवार्थेऽपि सत्वादतिव्याप्तिमाशङ्क्याह[5]- **अर्थेति** ॥ नन्वर्थविषयीकारित्वं यदि विषयविषयिभावसम्बन्धः तदेच्छायामतिव्याप्तिः, यदि चार्थविषयकज्ञानत्वं

---

१. लक्ष्यत्वमित्यर्थः २. लक्षणत्वभ्रान्तिम् ३. लक्षणत्वमेवंशब्देन

४. लक्षणपरत्वविवक्षया/लक्षणीयपदविवक्षया / लक्ष्यपरत्वविवक्षया

५. ज्ञानजनकतयेन्द्रियाणामर्थविषयीकारित्वे नैयायिकमतरीत्याऽर्थस्यापि ज्ञानजनकत्वेन तत्रापि अर्थविषयीकारित्वं भवतीत्यतिव्याप्तिशङ्का

तदेन्द्रियेऽव्याप्तिः, यदि च ज्ञानजनकसंसर्गगर्भत्वं तदाऽर्थेऽतिप्रसक्तिर्दुर्वारा, तत्साधनत्वगर्भत्वे ज्ञानेऽव्याप्तिस्तदवस्था। गमने च कथमतिव्याप्तिर्न स्यात्। ग्रामकर्मकं गमनमित्यनुभवेन ग्रामादेरपि विषयत्वात्। न च ज्ञेयपरतयाऽर्थपदस्य तद्वारणमिति वाच्यम्। ज्ञानोपलक्षितपरत्वे उक्तदोषतादवस्थ्यात्। विशिष्टपरत्वे इन्द्रियादावसम्भवापत्तेः। नापि ज्ञानतत्साधनान्यान्यत्वं विवक्षितोऽर्थः। तत्साधनान्यान्यस्य लिङ्गत्वे व्यर्थविशेषणत्वेऽपि तन्निष्ठधर्मस्य व्याप्यत्वे धूमालोकान्यान्यत्वस्य वह्निव्याप्यत्ववत् व्यर्थविशेषणत्वाभावात्। तदन्यान्यता-व्यतिरिक्तस्य लघोर्व्याप्यतावच्छेदकस्याभावादिति वक्तुं युक्तम्। तदन्यान्यत्वस्य तदन्यभेदात्मकस्य एतल्लक्षणसाध्यत्वेनासिद्धेरिति चेत्। अत्राहुः।

अर्थेन सह ज्ञानतद्विषयतत्साधनान्यानिरूपितसविषयत्वव्यवहारप्रयोजक-सम्बन्धत्वमित्यर्थः[१]। पुरोवर्तिनि घटत्वज्ञानं घटादौ चक्षुरादि प्रमाणं घटादौ प्रत्यक्षं प्रमाणमित्यादौ सप्तम्यर्थविषयत्वानुभवेन पूर्वोक्तसम्बन्धस्य केवलानु-प्रमाणयोः सत्त्वात्। घटे घटः प्रमाणमित्याद्यनुभवाभावान्न प्रमेयादावतिप्रसक्तिः। न चैवमिच्छादावतिप्रसक्तिः। तद्विषयस्यान्यनिरूपितत्वात्। एवं चान्यानिरूपि-तत्वविशेषणलाभायैवेहार्यत इति ज्ञेयेनैव सह यः सम्बन्ध इत्यवधारणमभिप्रेत्य तस्य च साधनान्यव्यवच्छेदार्थत्वमभिप्रेत्य पूर्वोक्तं विशेषणं सूचितमिति द्रष्टव्यम्।

ननु सविषयत्वस्य केवलानुप्रमाणसाधारणत्वे घटविषयकं ज्ञानमितिवत् घटविषयकं चक्षुरित्यादि कुतो न व्यवहार इत्याशङ्क्य तन्निरासार्थत्वं विभागस्य सूचयितुमाह- **प्रमाणानामिति**॥ तथा च केवलजनकतया सविषयके न केवलतुल्यो व्यवहार इति भावः। पारम्पर्यं केवलसाधनत्वमिति दर्शयितुं विशेषोद्देश इत्याह- **एतदिति**॥

---

१. सम्बन्धवत्त्वमित्यर्थः। विषयीकारित्वस्य प्रमाणतद्विषयसम्बन्धरूपतया तदुभयनिरूपितत्वावश्यम्भावात् ज्ञानतद्विषयतत्साधनान्यानिरूपितेति। (स)

### केवलप्रमाणलक्षणम्

(टी.) प्राधान्याभिप्रायेण प्रथममुद्दिष्टं केवलं लक्षयति-

## यथार्थज्ञानं केवलम्

संज्ञानिरुक्त्यैव लक्षणसिद्धौ भृङ्गग्राहिकया तज्ज्ञापनार्थं पृथगारम्भः। यथार्थेति संशयाऽदिव्युदासः।

### संशयनिरूपणम्

अनवधारणज्ञानं संशयः। स द्विविधः। अनिर्दिष्टकोटिको निर्दिष्टकोटिकश्चेति। तत्र कोटीनामतिबाहुल्यादनिर्दिष्टकोटिरनध्यवसायापरनामा। यथा, 'किंसञ्ज्ञकोऽयं वृक्षः' इति। द्वितीयोऽपि समानानेककोटिरन्यतरकोटिप्रधानश्चेति द्वेधा। तत्राद्यो यथा, 'किमयं ब्राह्मणस्तदितरो वा' इति। ऊहापरनामा द्वितीयो यथा, 'प्रायेणायं ब्राह्मणः' इति।

### नैयायिकैकदेशिमते संशयकारणानि

प्रत्येकं निश्चायकाभावसहकृतसमानासमानधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिजन्मा पञ्चधा भिद्यत इत्येके। तद्यथा, समानधर्मात् दीर्घत्वात् 'स्थाणुर्वा पुरुषो वा' इति। असमानधर्मात् आकाशविशेषगुणत्वात् 'शब्दो नित्योऽनित्यो वा' इति। विप्रतिपत्तेः 'भौतिकानीन्द्रियाणि उत अभौतिकानि' इति। उपलब्धेः 'किं सदिदमुदकमुतासत्' इति। अनुपलब्धेः 'किमत्र यक्षोऽस्ति न वा' इति।

### उदयनमते संशयकारणानि

उपलब्ध्यनुपलब्ध्योः समानधर्म एवान्तर्भावात् त्रैविध्यमित्यपरे[१]। समाने हि सदसतोरुपलब्धत्वानुपलब्धत्वे इति।

---

१. 'त्रैविध्यमित्यन्ये' इति रा.टि.पाठः।

